दशमस्कन्धोत्तरार्द्धे | श्री १०८ श्रीराधारमणो जयति। | प्रथमखण्डः

महर्षिप्रवरश्रीकृष्णद्वैपायनप्रणीतम्

# श्रीमद्भागवतम्।



श्रीश्रीपादश्रीधरस्वामिकृतभावार्थदीपिका, श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी, श्रीमद्विशिष्टाद्वैत-सिद्धान्तप्रतिष्ठापनाचार्यवर्यश्रीसुदर्शनसूरिकृतशुकपक्षीयसमाख्याटीका, तदनुगामिश्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका, श्रीमन्मध्वसिद्धान्तधुरन्धर श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली, श्रीगौडीयवैष्णवाचार्य्यप्रवरश्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भाख्यटीका, श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भाख्यटीका, श्रीमद्विष्णुस्वामिसिद्धान्तनिर्वाहकाचार्यप्रवरश्रीमद्वल्लभाचार्य्यकृतसुबोधिनी, तदनुयामि श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी, श्रीनिम्बार्कसम्प्रदायि-श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपाख्यटीका इति दशभिर्व्याख्याभि भाषानुवादेन च समलङ्कृतम्।

तदिदम्

परमहंसपरिव्राजकाचार्य्यपूज्यपादश्रीमत्स्वामिप्रकाशानन्दसरस्वतीप्रवरशिष्येण,

श्रीनित्यस्वरूपब्रह्मचारिणा

सम्पादितम्।

बङ्गदेशान्तर्गत ताडास भूपति श्रीराधाविनोद प्रेम सेवा परायण राजर्षिराय-

"श्रीवनमालिराय बहादुरस्य"

सम्पूर्णसाहाय्येन

प्रकाशितञ्च।

तच्च

श्रीवृन्दावन श्रीरङ्गमन्दिरस्थ पं० भागवताचार्य द्वारा

काञ्चीमण्डलान्तर्वर्ति 'कान्दूर' पं० श्रीरङ्गाचार्यद्वारा च संशोध्य

श्रीवृन्दावनधामनि

स्वकीये "श्रीदेवकीनन्दन" यन्त्रालये

मुद्रापितम्।

सम्वत् १९६४

# श्रीमद्भागवतम्।

## दशमस्कन्धः।

## उत्तरार्द्धम्।

## पञ्चाशत्तमोऽध्यायः।

### श्रीशुक उवाच।

अस्तिः (१)प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ !।
मृते भर्तरि दुःखार्त्ते ईयतुः स्म पितुर्गृहान् ॥ १॥
पित्रे मगधराजाय जरासन्धाय दुःखिते।
वेदयाञ्चक्रतुः सर्वमात्मवैधव्यकारणम् ॥ २॥
स तदप्रियमाकर्ण्य शोकामर्षयुतो नृप !।
अयादवीं महीं कर्त्तुं चक्रे परममुद्यमम् ॥ ३॥
अक्षौहिणीभिर्विंशत्या तिसृभिश्चापि सम्वृतः।
यदुराजधानीं मथुरां न्यरुणत् सर्वतोदिशम् ॥ ४॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

ॐ नमः कृष्णाय।

ततः पञ्चाशत्तमे तु जरासन्धभयादिव।
कारयित्वाऽम्बुधौ दुर्गं तन्निनाय निजं जनम् ॥
कपटान् कपटैरेव हत्वा दैत्यानयत्ततः।
अजयच्च जरासन्धं धर्मेणैव तु धार्मिकम् ॥

अस्तिप्राप्तिसंज्ञिके ईयतुर्जग्मतुः ॥ १–२ ॥ कंसे शोकः कृष्णे चामर्षस्ताभ्यां युतः ॥ ३ ॥ न्यरुणदुरोध ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

श्रीकृष्णचैतन्यचन्द्राय नमः।

महाब्धिमध्ये पतितं व्याकुलं शरणागतम्।
चैतन्यदेव भगवन् पारं प्रापय सत्वरम् ॥ १ ॥

गोकुलं पाण्डवकुलञ्च सान्त्वयितुमुभयत्र गन्तुमर्हेऽपि श्रीभगवति नरलीलत्वादन्तरायप्रायं महायुद्धादिकं वक्तुमारभते—अस्तिरित्यादिना। हे भरतर्षभेति खलु क्षत्रियस्त्रीणां स्वभावस्त्वया ज्ञायत एवेति भावः। दुःखेनार्त्ते व्यग्रे स्वशब्देन सम्प्रति पतिगृहे ममत्वाभावः सूचितः। स्मेति क्वचित् पाठः ॥ १ ॥

मगधदेशस्य राज्ञ इति तावद्दूरगमनं बोधयति। दुःखिते दुःखाभिव्यञ्जकरोदनादियुक्ते ॥ २ ॥

नृपः सर्वनरपतिः सम्राडित्यर्थः। नृपेति क्वचित् पाठः। अयादवां न विद्यन्ते यादवा यस्यां तादृशीं अयादवीम् इति पाठः क्वचित् ॥ ३ ॥

अक्षौहिणीसंख्येयं। खबाणाग्नि नवव्योम चन्द्रसङ्ख्याः पदातयः। (१०९३५०) खेन्दु षड्शर षट्सङ्ख्या अश्वाः (६५६१०) नागा रथा अपि। खाद्रि नागेन्दु दृक् संख्या (२१८१०) इत्येषाऽक्षौहिणी

---

(१) प्रास्तीवीति विज० पा० वीर पा० ॥

स्मृतेति । यदुराजधानीमिति तस्या निरोधस्य च महत्त्वे हेतुः सर्वदिङ्निरोधे विशेषः श्रीहरिवंशे जरासन्धोक्तौ—

"सर्वतो नगरी चेयं जानीघैः परिवार्य्यताम् ।
अयोयन्त्राणि युज्यन्तां क्षेपणीयाश्च मुद्गराः ॥
उर्द्ध्वञ्चापि निवार्य्यन्तां प्रासा वै तोमरास्तथा ।

किञ्च मल्लः कलिङ्गाधिपतिश्चेकितानः सबाह्लिकः ।
काश्मीरराज्ये गोनर्दः करुषाधिपतिस्तथा ॥
द्रुमः किंपुरुषश्चैव पार्व्वतीयो ह्यनामयः ।
नगर्याः पश्चिमद्वारं शीघ्रमारोधयन्त्विति ॥
पौरवो वेणुदारवः वैदर्भः सोमकस्तथा ।
रुक्मीच भोजाधिपतिः सूर्य्याक्षश्चैव गालवः ॥
विन्दानुविन्दावावन्त्यौ दन्तवक्त्रश्च वीर्यवान् ।
छागलिः पुरुमित्रश्च विराटश्च महीपतिः ॥
कौशल्यो मालवश्चैव शतधन्वा विदूरथः ।
भूरिश्रवास्त्रिगर्त्तश्च वाणः पञ्चनदस्तथा ॥
उत्तरं नगरद्वारमेते दुर्गसहा नृपाः ।
आरुह्य चापि मर्द्दन्तां वज्रप्रतिमगौरवाः ॥
उलूकः कैतवेयश्च वीरश्चांशुमतः सुतः ।
एकलव्यो बृहत्क्षत्रः क्षत्रधर्म्मा जयद्रथः ॥
उत्तमौजाश्च शल्यश्च कौरवाः केकयास्तथा ।
वैदेहो वामदेवश्च साकेतश्च सिनीपतिः ॥
पूर्वं नगरनिर्व्यूहमेतेष्वायत्तमस्तु नः ।
अहञ्च वरदश्चैव चेदिराजेन सङ्गताः ।
दक्षिणं नगरद्वारं वारयिष्याम दंशिताः ॥

इति ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीमते रामानुजाय नमः ।

॥ १—६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रीमते रामानुजाय नमः ।

व्याख्यातं दशमस्कन्धपूर्वार्द्धं मे यथाश्रुतम् ।
यथामतीतस्तुष्यन्तु क्षाम्यन्तु गुणवत्तमाः ॥

अथ जरासन्धजयात्मकं भगवच्चेष्टितं वर्णयितुकामः तावज्जरासन्धस्य भगवता सह युयुत्साकारणं प्रस्तौति—अस्तिरिति सार्द्धद्वयेन । हे भरतर्षभ ! अस्तिः प्राप्तिश्चेति द्वे कंसस्य भार्ये ते भर्त्तरि कंसे हते सति भगवतेतिशेषः दुःखार्त्ते दुःखपीडिते भूत्वा पितुः जरासन्धस्य गृहानीयतुर्जग्मतुः ॥ १ ॥

ततो मगधदेशाधिपतये जरासन्धाय स्वपित्रे दुःखिते अस्तिप्राप्ती सर्वमात्मनो वैधव्यकारणं निवेदयाञ्चक्रतुः ज्ञापितवत्यौ॥२॥

स जरासन्धस्तद्दुहितृभ्यामावेदितमप्रियमाकर्ण्य शोकामर्षाभ्यां युतः महीं यादवाङ्कुररहितां कर्तुं परमुद्यमं प्रयत्नं चक्रे ॥ ३ ॥

तदेवाह— अक्षौहिणीति । त्रयोविंशत्यक्षौहिणीबलपरिवेष्टित इत्यर्थः । यदुराजानामाश्रयभूतां मथुरां चतुर्दिक्षु निरुद्धवान् ॥४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीमदानन्दतीर्थपादेभ्य नमः ।

सच्छास्त्रस्यासच्छास्त्रेणेव कतिपयेष्वध्यायेषु श्रीकृष्णस्य जरासन्धेन सह सङ्ग्रामं वर्णयति—तत्त्वनिर्णयेन सदसतां भक्तिद्वेषाभ्याम् उद्बुद्धाभ्यां विहितनिर्वाणाऽवाप्तिर्भवति तत्र कथां प्रसञ्जयितुमाह—अस्तीत । अस्तिप्राप्तिशब्दाभ्यां अविद्याया द्वे रूपे संशयविपरीतज्ञाननामनी उच्येते तत्र संशये ज्ञानसत्तामात्रमस्ति विपरीते तदपि नास्तीत्यस्तिप्रास्ती "असभुवि" "भू सत्तायाम्" इति धातोः । यद्वा, निश्चायकप्रमाणाभावेन निश्चयज्ञानाभावात्संशयविपरीतज्ञानवाचकावेतौ "असु निरसने" इति धातोः कंसस्य महिष्यौ "कसि हिंसायाम्" इति धातोः हिंसात्मनो धर्मस्य महिमबन्धकत्वेन सम्बन्धिन्यौ "षिञ् बन्धने" इति धातोः कृष्णानाम्ना धर्मेण भर्तरि स्वनिर्वाहके कंसनाम्न्यधर्मे हते विनाशिते स्वपितुः स्वपोषकस्य जरासन्धस्य "जृ वयोहानौ" इति धातोर्वयोहानिहेतुभूता शैवी शास्त्रसंहितां जरेत्युच्यते तस्यां सन्धा मरणापत्तावपि न मुञ्चामीति प्रतिज्ञा यस्य स तथा तस्य गृहान् प्रमेयविशेषानीयतुः प्राप्य स्थिते शब्दशक्तिविचक्षणैः पुरुषैरध्यात्मविषयतया अत्रार्थो ज्ञातव्य इति ग्रन्थबाहुल्यभीरुणा मया न प्रदर्श्यत इति ॥ १ ॥

आत्मवैरूप्यकारणम् आत्मवैधव्यादिनिमित्तम् अन्यत्र प्रतिपादनासामर्थ्यम् ॥ २ ॥

"नृ नये" इति धातोः नृन् नयान् शैवशास्त्रोक्तान् पिबतीति नृपः शास्त्रज्ञः यः प्रतिलंभूभेत्यभिधानात् यो विष्णुः स एवादो दुष्टदण्डकस्तं वान्ति शरणं गच्छन्तीति यादवाः वैष्णवाः तद्धिताम् ॥ ३ ॥

एकस्थानमारभ्य षोडशस्थाने या सङ्ख्या साऽक्षौहिणीत्युच्यते इति अन्ये, गजानां सप्तसहस्राणि द्विशती साशीतिः एवं रथानामपि सङ्ख्या अश्वानामेकविंशतिसहस्री पञ्चशती विंशतिश्च पदातीनां पञ्चत्रिंशत्सहस्रं विंशतिभिश्चेत्यक्षौहिणीसङ्ख्यां ब्रुवते एको गज एको रथस्त्रयोऽश्वाः पञ्च पदातय इति दशसङ्ख्यापत्तिर्नाम त्रिगुणिता पत्तिः सेनामुखमिति भिन्नं वा पदं सेनामुखस्त्रिगुणो गुल्मनामा तत्त्रिगुणो गुणनामा गुणत्रिगुणा वाहिनीनामा वाहिनीत्रिगुणा पृतना तत्त्रिगुणा चमूः त्रिगुणिता चमूरनीकिनी दशानीकिनीत्यक्षौहिणीति केचित्

एकेभैकरथात्र्यश्वा पत्तिः पंच पदादयः ।
अत्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ।
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।
अनीकिनी दशानीकिन्यक्षौहिणी—" इत्यमरः ॥ ४—९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

श्रीगोपीजनवल्लभाय नमः ॥

उत्तरार्द्धे हरेर्लीला स्वतः सर्वात्मना कृता ।
यदर्थमवतीर्णोऽसौ सा निरूप्या विभागशः ॥

एषा निरोधलीलैव स्वसंसारहरा परम् ।
भगवांश्च तदीयाश्च तच्छास्त्रश्चेति सा त्रिधा ॥
चतुर्दशभिरध्यायैः प्रमाणं तस्य रूप्यते ।
तदीया एकविंशत्या षड्भिः स च निरूप्यते ॥
कृतिः प्रमाणं तु हरेः स्वतश्चान्यानुरोधतः ।
सप्तभिः सप्तभिः प्रोक्तो गुणैर्युक्तो हरिस्तथा ॥
वाक्यात्तदीया विशेयास्तस्यैव न तु शास्त्रतः ।
एकविंशविधं सर्वं श्रुत्वा तद्वद्बुधोदितम् ॥
षड्गुणैर्भगवान् रूप्यस्तेषु सर्वं प्रतिष्ठितम् ।
तत्र तु प्रथमेऽध्याये स्वावतारप्रयोजनम् ॥
निरूप्यतेऽत्र धर्मेण जयोऽन्यश्च निरूप्यते ।
राजसानां साधने तु निरोधे भगवत्कृतिः ॥
सर्वथा साधनमिति तदेवादौ निरूप्यते ।
विवाहपुत्रजन्मान्ता सा निरूप्या विशेषतः ॥
अलौकिकं तु तत्स्थानं निरूप्यामिति रूप्यते ।
तस्योपद्रवनाशाय भ्रमोत्पादनमीरितम् ॥
निग्रहानुग्रहौ चैव प्रसङ्गात्सुनिरूपितौ ।
अन्यथा लौकिकी लीला कृष्णस्यास्यान्न चान्यथा ॥
त्रिविधो हि क्षत्रियाणां विवाहः परिकीर्त्तितः ।
गान्धर्वो राक्षसश्चैव विहितश्च स्वगृह्यतः ॥
पुत्रस्यापि कथा वाच्या ह्यर्थेनापि समर्पिता ।
भार्यामाहुः क्षत्रियस्य तत्प्रसङ्गात्तथापरा ॥
सत्यभामाविवाहान्ता कथेयं विनिरूपिता ।
त्रिविधं दुःखमादौ हि भक्तानां विनिरूपणम् ॥
भूमेर्भ्रातुर्व्रणवानां वैकुण्ठादागतिर्यतः ।
द्वयमप्यत्र मथुरात्यागे हेतुर्निरूप्यते ॥
प्रमाणरक्षासिद्ध्यर्थमनिवार्यं तु तद्द्वयम् ।
निवार्यः सप्तदशधा ब्रह्माण्डे तु प्रजापतिः ॥
स सप्तदशधा प्रोक्तस्तन्निवृत्तावशक्यता ।
अतोऽत्र प्रथमं वाच्यं कृतिशक्यमनेकधा ॥
उत्तरार्द्धसमैः श्लोकैरतिदेशस्ततःपरम् ।
द्वाभ्यां कलाभिरपरः साधिकाभिरिति स्थितिः ॥

भगवानक्लिष्टकर्मेति निरूपयितुं प्रथमं कंसभार्ययोरुपद्रवहेतुमाह—अस्तिप्राप्तीतिद्वाभ्याम् । उभयोः क्रियानामत्वमग्रे क्रियायोगत्वाय प्रथमत एवतथा निरूपितम् अस्तीति सर्वधात्वर्थः क्रियासामान्यं प्राप्तिः सर्वक्रियाफलं भगवदिच्छया एते पुत्ररहिते अनिरुद्धे भवत्सान्निध्यादेव भर्त्रा सहगमनरहिते पितृगृहे गते दिग्विजये पराजितः सोऽपि दुहितरमदादिति पुराणान्तरप्रसिद्धिः चकारात्तत्सम्भृतिर्दास्यः सर्वाश्च पितुर्गृहादानीयतु। आकारणन्तत एव नापेक्षितं निमित्तम्भर्त्तृमरणं भगवतोऽतिसमर्थस्याक्लिष्टकर्मत्वज्ञापनाय तयोर्गमनं प्रसिद्धमेव जातमित्याह—स्मेति । नन्वेवं साधनफलरूपयोः कथं वैधव्यमिति चेत् तत्राह—कंसस्य महिष्याविति । महिषीत्वात् पराधीनत्वं तद्भोगातिशये प्रवृत्ते अपि भगवदिच्छया तथाभूते तद्विश्वासार्थं भरतर्षभेति नात्र तयोर्दुःखे लौकिकं किञ्चिदस्ति इति भावः । गमनेऽपि न दुःखान्तरं हेतुः किन्तु भर्तृहननमेव ॥ १ ॥

गतयोः कृत्यमाह—पित्रे इति । मगधराजायेति प्राकृतदेशाधिपतित्वेन दोषोऽपि निरूपितः दुर्जयत्वं निरूपयितुं जरासन्धायेति दुहितृप्रियत्वं निरूपयितुं दुःखित इति सर्वमाकाशवाणीप्रभृति मरणान्तम् आत्मनो धवाभावकरणम्, कृष्णचरितमिति यावत् ॥ २ ॥

पूर्वं तेन कंसवधः श्रुत एव परं मल्लक्रीडायां मञ्चात् पतितो दैवान्मृत इति इदानीं हेतुपूर्वकं भगवच्चरित्रं श्रुत्वा सर्प इव जात इत्याह—स तदाऽप्रियमाकर्ण्येति । छलेन मारणादमर्षः मरणं त्वप्रियं राजा हि दुःखशोकप्रतीकारं करोत्येव समर्थस्य तूष्णीम्भावो न युक्त इति अयं दोषो वस्तुतो वसुदेवस्य तद्रक्षार्थं सर्व एव यादवाः प्रवर्त्तिष्यन्त इति पृथिवीमयादवीमेव करिष्यामि इति मनसि विधाय तदर्थं महान्तमेवोद्योगं कृतवान् स हि महान् भवति कृष्णस्य च दोषं न पश्यति, आनुपूर्वी तादृशी श्रुतेति परमोद्यमः तद्बन्धूनामपि स्ववशीकरणमुपायैः सेनादिसम्पत्तिः स्पष्टैव ॥ ३ ॥

तस्योद्यमस्य फलमाह—अक्षौहिणीभिर्विंशत्येति । अक्षौहिणी त्रितयं तस्य गृहस्थं विंशतिरुद्यमेन सम्पादिताः पूर्वस्थितं विशेषेण प्रवक्ष्यतीति चकारेण समुच्चयः पृथङ्निरूपणं च कृतम् अभितः सम्वृत इत्यैकमत्यमेकप्रभुत्वञ्चोक्तं यादवानां जये स्थानग्रहणं मूलमिति मथुराग्रहणार्थतां न्यरुणत् यतः सा राजधानी सर्वतो दिशामिति तत्रत्यानां निर्गमनाभावाय न्यरुणत् आवृतवान् अष्टदिक्ष्वावरणम् अनेन रात्रावेव व्याजान्तरेण समागत्यावरणं कृतवानिति लक्ष्यते ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दशमस्यैष पूर्वार्द्धोऽनुगृह्णान्मे धियं यथा ।
परार्द्धोऽप्यनुगृह्णातु तथा श्रीगुरवे नमः ॥
पञ्चाशत्तम ईशोऽपि विजित्वापि जरासुतम् ।
द्वारकां स्वजनं निन्ये तद्भीत्याऽष्टादशे मृधे ॥
॥ १-४ ॥

---

श्रीच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीकृष्णाय नमः ॥

पञ्चाशत्तमे कंसवधश्रवणकुपितेन जरासन्धेन सहासकृद्युद्धक्रीडां भगवान् कृतवान् समुद्रे दुर्गं कारयित्वा तत्र स्वजनतांश्च स्थापितवानित्याह—अस्तिरिति । ईयतुः । जग्मतुः ॥ १ ॥
वेदयाञ्चक्रतुः ज्ञापितवत्यौ ॥ २ ॥
तद्दुहितृभ्यामावेदितं जामातृवधमाकर्ण्य जमातरि शोकः श्रीकृष्णे अमर्षः ताभ्यां युतः ॥ ३ ॥
सर्वतो दिशं सर्वासु दिक्षु न्यरुणत् रुरोध ॥ ४ ॥

---

भाषाटीका ।

श्रीरुक्मिणीकान्ताय नमः ।

दशमोत्तरार्द्धभाषां श्रीवैदर्भीशपदकञ्जम् ।
नत्वा भागवतार्यो लिखति सतां हैन्दवीं प्रीत्यै ॥ १ ॥

अब इस उत्तरार्द्ध में पंचावें अध्यायमें श्रीकृष्ण जरासन्ध सें डरे से होकर समुद्र में दुर्ग (किला) बनाकर अपने यादव लोगों को उसमें ले गये, और कपटी दैत्यों को कपटियों हीसे विनाशस मरवाकर,

निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम्।
स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम् ॥ ५ ॥
चिन्तयामास भगवान् हरिः कारणमानुषः।
तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥ ६ ॥
हनिष्यामि बलं ह्येतद्भुवि भारं समाहितम्।
मगधेन समानीतं वश्यानां सर्वभूभुजाम् ॥ ७ ॥
अक्षौहिणीभिः संख्यातं भटाश्वरथकुञ्जरैः।
मागधस्तु न हन्तव्यो भूयः कर्त्ता बलोद्यमम् ॥ ८ ॥

धार्मिक जरासन्ध को धर्मयुद्ध से जीता इस कथा का वर्णन करतेहैं —

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि—हे भरतवंशी लोगों में श्रेष्ठ! हे राजन्! अपने भर्त्ता कंस के मरने पर अस्ति और प्राप्ति जो दोनो कंसराजा की रानी रहीं सो बड़ी दुःखित होयके अपने पिता जरासन्ध के गृहों को जाती भई ॥ १ ॥

और वहां जाकर मगध देश के राजा जरासन्ध जो दुःखित अपने पिता उनको अपने विधवापने का सब कारण निवेदन करती भई ॥ २ ॥

हेराजन्! वह जरासन्ध राजा उस अप्रिय समाचार को सुनकर बड़ा शोक और अमर्ष (असहनता) युक्त होकर पृथिवी को विना यादवों की करने के लिये बड़ा उद्यम करता भया ॥३॥

और तेईस २३ अक्षौहिणी सेनाको लेकर यादव लोगों की राजधानी जो मथुरा तिसको चारों तरफ से घेर लेता भया ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तस्य बलं सैन्यमुद्वेलं लङ्घितमर्यादं सागरमिव तेन तस्य बलेन संरुद्धम् ॥ ५ ॥

किम्बलमेव हन्मि न मागधं मागधं वा हत्वा बलं गृह्णामि यद्वा, समागधं सर्वं हन्मीति चिन्तयामास। ननु, प्रथमं कथं जेष्यामीत्येवं चिन्तयितुं युक्तं तत्राह—कारणमानुष इति। भूभारावतारकारणेन मानुषो ननु तत्त्वत इति ॥ ६ ॥

एवं त्रिधा विचिन्त्य प्रथमं पक्षं निर्धारितवांस्तदाह—चतुर्भिः हनिष्यामीति ॥ ७ ॥

बलोद्यमं कर्त्ता करिष्यतीति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

निरीक्ष्येति युग्मकम्। कारणं सर्व्वकारणं यत्तत्त्वं तद्रूप एव मानुषस्तदाकारः नतु प्राकृतरूप इति तल्लीलत्वे सर्वज्ञानादि शक्तिमत्त्वं तस्य देशस्य कालस्य चानुरूपं महासैन्येन सर्व्वतः श्रीमधुपुर्य्यां निरोधादवश्यमत्रैव योग्यं तत्राप्यधुना विलम्बं विनैवेत्यर्थः ॥ ५-६ ॥

तदेवाभिव्यञ्जयति— हनिष्यामीति सार्द्धकेन। बलं सैन्यं हि यतः सम्यक् आहितमर्पितं भारस्वरूपं सम्यक् सर्व्वतः समाहृत्य प्रोत्साह्य चानीतं वश्यानां वशे स्थितानाम् अत एव पाण्डवाः श्रीभीष्मश्च नायाता इति ज्ञेयम् ॥ ७ ॥

भटादिभिर्या अक्षौहिण्यः आभिरेव ननु तासां प्रत्येकं सङ्ख्यातमित्यन्तं बाहुल्यमुक्तं मागधस्त्वित्यर्द्धकम् ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदा श्रीकृष्णः उद्वेलं लङ्घितमर्यादं सागरमिव स्थितं तस्य जरासन्धस्य बलं तेन बलेन संरुद्धं स्वपुरं भयेन व्याकुलं स्वजनं च निरीक्ष्य चिन्तयामासेति सम्बन्धः ॥ ५ ॥

हरिः कारणमानुष इति हेतुगर्भं यद्यपि न तस्योपद्रवः सर्वकारणत्वेन न तद्बलसंहारे प्रयासश्च तथापि आश्रितार्तिहरत्वात्सर्वकारणत्वेपि मानुष्यत्वात् गृहीतमनुष्यरूपतत्सजातीय चेष्टितत्वान्मनुष्यवच्चिन्तयामास चिन्तयित्वा निश्चितवानित्यर्थः। किङ्कर्थमित्यत्राह— तद्देशेति। तद्देशकालानुगुणं यथा भवति तथा स्वावतारप्रयोजनं विचार्य्याऽध्यवास्यत् ॥ ६ ॥

विचार्य्य निश्चितमेव दर्शयति— हनिष्यामीति चतुर्भिः। वशे भवाः वश्याः तेषां सर्वेषां भूभुजां राज्ञामेतद्भूमेर्भाररूपं समाहितं समुदितं मागधेन जरासन्धेन आनीतमत्र प्रापितम् ॥ ७ ॥

अन्योपि वराहादिदेहः। धर्मरक्षार्थं प्रभवतः उद्भवतः अधर्मस्य विरमाय च मया सम्भ्रियते ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कारणं सर्व्वकारणं यत्त्वं तद्रूप एव मानुषस्तदाकारः नतु प्राकृतरूप इति तल्लीलत्वेऽपि सर्व्वज्ञानादिशक्तिमत्त्वं दर्शितम् ॥ ६ ॥

वश्यानां वशे स्थितानाम् अत एव भीष्मपाण्डवाश्च नायातानिति ज्ञेयम् ॥ ७—१० ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदा भीतानां वार्त्ताकथनं व्यर्थमिति भगवतश्चरित्रमाह—निरीक्ष्येति । यतो भगवान् कालात्मा अवतीर्णः तच्च समागतं बलरूपं न तु स्नेहार्थमन्यार्थं वा समागतं तस्य अमर्य्यादत्वं बहुत्वञ्चाह—वेलामतिक्रम्य समागच्छन्तं सागरमिव दृष्टवान् नन्वक्लिष्टकर्मा भगवान् यादवानयनार्थमागतो जरासन्धः यादवान् नयतु राजा वा विचारं करिष्यति स्वयं किमित्येवं कृतवानित्याशंक्याह—स्वपुरं तेन संरुद्धमिति । मथुरा तु स्वनगरं न केवलं यादवपुरीमात्रं निरीक्ष्येति त्रिषु सम्बन्धः मथुरा एका मोचनीया अन्ये निर्भयाः कर्त्तव्याः एकं च मारणीयमिति गुणानां कार्यमुपस्थितमिति दर्शनं स्वजना भक्ताः ते च भयाकुलाः चकारात् तत्सम्बन्धिनोऽन्ये पुरवासिनः बलस्यैकत्वमनायासेन मारणाज्ञापनाय पुर्य्यास्त्वावश्यकत्वाय स्वजनं वसुदेवं ज्ञापयितुम् ॥ ५ ॥

तत्र भगवान् पदार्थद्वयस्योपस्थितत्वात् किं कर्त्तव्यमिति चिन्तां कृतवानित्याह—चिन्तयामासेति । ननु, किमेतत् द्वयं यदर्थं चिन्तेत्याशङ्क्याह—हरिः कारणमानुष इति । भगवानित्युभयथापि करणे सामर्थ्यमुक्तं । किमक्लिष्टकर्मत्वात् कंसवदयं मारणीयः तावत् स्वजनाभिभवः सोढव्यः आहोस्विदक्लिष्टकर्मत्वं परित्यज्य वैषम्यमङ्गीकृत्य युद्धादिकं कर्त्तव्यमिति किन्तावत्प्राप्तं स्वधर्मपरित्याग अनुचित इति हरित्वं दूरीकृत्य कारणार्थं व्याजेन मनुष्यो जात इति कंसवदेव मारणीयः अन्यथा व्याजकरं व्यर्थं स्यात् मानुषभावेनावतीर्णः तस्माद्युद्धं न कर्त्तव्यमिति पूर्वः पक्षः सिद्धान्तस्तु कर्त्तव्य इति यतो हरिरयं न भक्तानां दुःखं सहते स्वधर्मश्च कर्त्तव्यः साम्राहिको षोडशवार्षिको भवति युद्धार्थमागतो न च सह युद्धं कर्त्तव्यमिति । ननु, स्वधर्मोऽन्यथा भविष्यतीति कथं क्लिष्टकरणमित्याशङ्क्य देशानुरोधेन करणं निरूपयति—तद्देशकालानुगुणमिति । तस्य देशस्य तस्य च कालस्य युद्धकरणमेवानुगुणं कदाचिदङ्गानुरोधेनाप्यङ्गिनो धर्माः अन्यथा क्रियन्ते यथा प्रवर्ग्यसम्भारे आदित्यास्तमये विरमणं कृतान्तादेव विरमेदिति यथा वा देशदोषेण प्रधानयागस्यापि नाशः दक्षयज्ञे तस्मात् तस्मिन् देशे अभक्ताः स्थास्यन्तीति तदवरोधेन ते मारणीयाः तेषाञ्च मृत्युकाल उपस्थित इति कालानुरोधोऽपि कर्त्तव्यः अतः क्लिष्टकरणं तद्देशकालानुगुणं भवति । किञ्च, स्वावतारप्रयोजनमपि भवति अवतारो हि भक्तानामुद्धारार्थः स च कालं वञ्चयित्वा लौकिकवत् कृत्वा भक्ता नेयाः तत्र क्लिष्टकरणमुपयुक्तं भवति अन्यथा कालो भक्तेषु द्रोहं कुर्यात् कार्यादिभिः ततो बहुकर्त्तव्यमापद्येत अतः स्वावतारस्य प्रयोजनं यस्मात् तादृशमपि विषमकरणमिति भगवतश्चिन्ता युक्ता ॥ ६ ॥

चिन्तया निर्धारितं पक्षमाह—हनिष्यामीति चतुर्भिः । बलं हनिष्यामीति प्रतिज्ञा युक्तश्चायमर्थः लोके हि यदुपरि यो गच्छति स तेन मार्यत इति नात्र विरोधः एतदिति प्रदर्शनेन बलस्यातिक्रमोऽपि सूचितः । बलेन समागत इति बलेनैव वधो युक्तो न तु व्याजेन पूर्वोक्तास्तु व्याजेन समागता अतस्तेषां व्याजेनैव हननं युक्तम् "ये यथा मां प्रपद्यन्ते" इति भगवतो व्रतरूपोऽपि धर्मः परिपालितो भवति अनेन मारणवैषम्यबुद्धिरपि परिहृता भवति मार्य्याणामेवतथा बुद्धिर्जातेति एतत्सर्वमभिसन्धाय भगवान् हिशब्दमाह—किञ्च, सर्वैर्भूभारहरणार्थं विज्ञापिते कार्यान्तरार्थमागच्छन्नपि तेषां कृपयापि तथा समागतः अत आगमनकार्यसिद्ध्यर्थमपि मारयिष्यामीति आह—भुविभारमिति । एतद्भाररूपमेव बलमत एव सर्वाधः पाताले स्थापितं तत्कालेन भुवि समाहितं सम्यगाहितत्वात् न कृत्रिमकालकर्मादिभिः दूरीकर्त्तुं शक्यते । ननु, राज्ञो बलं धर्महेतु भवतीति तद्वधे प्राणिवधः अधर्मश्च स्यादिति चेत् तत्राह, मागधेन अधमदेशोद्भवेन समातीतमिति । नन्वेतावता स्वामी महानेव भविष्यतीत्याशङ्क्याह—वश्यानां सर्वभूभुजामिति । तद्वश्या दुष्टा एव तेऽपि तत्स्वभावापन्ना जाता इति अनेन तद्बलं न ग्राह्यमिति अप्युक्तं दुष्टं भरात्मकमिति ॥ ७ ॥

तस्याजेयत्वज्ञापनायाह—अक्षौहिणीभिः सङ्ख्यातमिति । समूहशो युद्धे भङ्गो भवेत् सजातीया बहवोऽपि एकेन विजातीयेन हस्त्यादिना मार्यन्त इति आदौ पञ्चभटा युद्धं कुर्वन्ति तेषां पराजयशङ्कायां त्रयोऽश्ववाराः तेषामपि पराजये एको रथी प्रवर्त्तते तस्यापि तथात्वे षाष्टिहायनो गजः एवमेकापि पत्तिः क्रमतः सन्निविष्टा जेतुमशक्या तादृशमेतदित्याह—भटाश्वरथकुञ्जरैः कृत्वा पत्त्यङ्कत्रिगुणन्यायेन क्रमवृद्ध्या अक्षौहिणी सञ्ज्ञामपन्नाः तेऽपि बहवः अतोऽन्येषामशक्यत्वात् मयैव हन्तव्यं बलम् अनेन सार्द्धश्लोकेन बलस्यावश्यवधार्थदुष्टत्वं भारत्वं च निरूपितम् । ननु, शास्त्रफलं प्रयोक्तरीति न्यायेन मागध एव किं न हन्यते एते च दीना मोचनीया इति चेत् तत्राह— मागधस्तु इति । तुशब्दस्तेषां वधाभावं निराकरोति । भाररूपत्वात् यद्यपि मागधोऽपि भूभाररूपः तथापि शवदाहककाष्ठदाहकवीर्यवंशवदन्तपर्यन्तं स रक्षणीयः अतो मागधो न हन्तव्यः तदेवाह— भूयः कर्त्ता बलोद्यममिति । बलानयनार्थम् उद्यमं करिष्यति अन्यथा बलं निलीय तिष्ठेत् भारभूतसमानयनार्थं वा अधिकः प्रयत्नो भवेत् यतोऽयं मागधो दुष्टः आमरणान्तं यत्नं करिष्यतीति ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उद्वेलं वेलातस्तीरादप्युद्धृतं लङ्घितमर्य्यादमित्यर्थः । ननु किमनेन चिन्तयामास तत्र नहि नहीत्याह, कारणं सर्वकारणस्वरूपो महामहेश्वरश्चासौ मानुषश्चेति सः ॥ ५ ॥

तच्चिन्तनमाह चतुर्भिः ॥ ६ ॥

बलं सैन्यं तदर्थमुद्यमं कर्त्ता करिष्यति ॥ ७-८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वेलायास्तीरादुद्धृतं बहिर्गतं लङ्घिततीरं सागरमिव भगवान् चिन्तयामासेति नन्वाप्तकामस्य चिन्तने किं कारणमत्राह । कारणमानुष इति । कारणचिन्तनेतिमितं । निग्रहानुग्रहविषया मानुषाः यस्यसः कारणं विश्वहेतुश्चासौ स्वकृतसेतुपरीक्षया मानुषः

एतदर्थोऽवतारोऽयं भूभारहरणाय मे ।
संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥ ९ ॥
अन्योऽपि धर्मरक्षायै देहः सम्भ्रियते मया ।
विरामायाप्यधर्मस्य काले प्रभवतः क्वचित् ॥ १० ॥
( १ ) ( एवं ध्यायति गोविन्दे मगधाधिपतिर्बली ।
मथुरां सवनोद्यानां रुरोध बहुसैनिकः ॥ ( क )
कलिङ्गश्चेकितानश्च दन्तवक्त्रविदूरथौ ।
उल्मुको वेणुदारी च शाल्वश्चैद्यश्च दुर्मतिः ( ख )
पूर्वद्वारं समासाद्य रुरुधुर्मागधाज्ञया ।
विन्दानुविन्दावावन्त्यौ विराटो दरदस्तथा ( ग )
एकलव्यो वाह्लिकश्च तथा पञ्चनदेश्वरः ।
रुरुधुर्दक्षिणद्वारं पौण्ड्रकश्च महाबलः ( घ )
युधामन्युर्बृहत्क्षत्रः शाल्वो भूरिश्रवास्तथा ।
उत्तमौजाश्च रुक्मी च द्रुमश्चैव सुदक्षिणः ( ङ )

श्रीशुकदेवकृतसिद्धान्तप्रदीपः ।

मनुष्याणामयं निग्रहानुग्रहकर्ता चेति वा कथं धार्मिका अनुगृहीताः अधार्मिकाः निगृहीताश्च स्युरिति चिन्तयामासेत्यर्थः ॥ ५—६ ॥ बलं सैन्यं तदुद्यमं कर्त्ता करिष्यति ॥ ७ ॥

अन्योऽपि वराहादिदेहः । धर्मरक्षायै प्रभवतः उद्भवतः अधर्मस्य विरमाय च मया सम्भ्रियते ॥ ८ ॥

भाषा टीका ।

श्रीकृष्ण भगवान् भी वेला ( तट ) को लांघने वाले समुद्र सदृश उसकी सेना को देखकर, और उस सेना से घिरे भये अपने नगर ( मथुरा ) को देखकर, तथा अपने यादव लोगों को भयसे व्याकुल देखकर ॥ ५ ॥

कारणके लिये मनुष्य रूपधारण करने वाले भगवान् श्रीहरि उस देश कालके अनुगुण अपने अवतार के प्रयोजन का चिन्तमन करते भये ॥ ६ ॥

भगवान् मनमें विचार करने लगे, कि—भूमि में इकट्ठी भई भाररूप यह अपने वशमें रहने वारे राजाओं की सेना को मगध देश का राजा जरासन्ध जो लाया है इसको मैं मारूंगा ॥ ७ ॥

जो सेना योधा, अश्व, रथ, और हस्तियों से मिलकर अक्षौहिणी की संख्या से गिनी जातीहै, बस इस वडी सेना मात्र को मारना उचित है, और जरासन्ध को न मारना चाहिये, कि जिससे यह फिर भी सेना इकट्ठी करनें का उद्यम करेगा ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वत एव हन्तव्यस्तत्राऽऽह एतदर्थ इति । एतच्छब्दार्थं स्पष्टयति—भूभारहरणायेति ॥ ९ ॥

अयमेतदर्थोऽवतार इत्युपलक्षणमित्याह—अन्योऽपीति । प्रभवत उद्भवतः ॥ १० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एतदर्थ इति एतस्मा इत्यर्थः । कस्मै तत्राह—भूभारहरणायेत्यादि अवतारः प्रपञ्चे प्राकट्यं अयमिति तैः ( स्वामि ) सम्मतः पाठः उत्तरावतारिकानुरोधात् हीति क्वचित् मे मया भूभारहरणं स्पष्टयति, संरक्षणायेति । संशब्देन स्वभक्तिप्रवर्त्तनादिना लोकद्वयेऽपि रक्षा सूचिता ॥ ९ ॥

अन्योऽपि किमुत सर्व्वैश्वर्य्यादिपूर्णोऽयमित्यर्थः सम्भ्रियते प्रकाश्यते इत्यर्थः । तथा च श्रीगीतासु "यदा यदा हि धर्मस्य ग्लानिर्भवति" इत्यादि ॥ १० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रभवतः प्रकर्षेण भवतः ॥ ॥ १०–१२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, किं वृथा बलहनने न समर्थः यो द्वेष्टि स एव हन्तव्यः इत्याशङ्क्य तद्वधावतरणं नाथवत्स्यादित्यभिप्रयन्नाह—

( १ ) इमे श्लोका विजयध्वजीयेऽधिकाःप्रपठ्यन्ते ।

एते नियुक्ता राजानो जरासन्धेन भारत !।
पश्चिमद्वारमासाद्य रुरुधुर्मथुराम्पुरीम् [ च ]
द्रुपदः शिशुपालश्च त्रिगर्तोऽथ जयद्रथः।
शकुनिः सौमदत्तश्च कुणिन्दश्च महाबलः [ छ ]
जरासन्धेन सहिताः सर्वे मत्तबलान्विताः।
उत्तरद्वारमासाद्य रुरुधुर्भरतर्षभ ! [ ज ]
ते निरुध्य चतुर्द्वाराण्युद्वलाम्भोधिसन्निभाः।
सिंहनादश्च कुर्वन्तो दध्मुः शङ्खाननेकशः [ झ ]
क्ष्वेलन्तो युद्धसन्नद्धा जघ्नुर्भेरीः सहस्रशः [ ञ ]
तद्वारभूपालकदम्बजृम्भितं युगावसानार्णवघूर्णितोपमम् ॥
निशम्य कृष्णो न चचाल चेतसा सृगालघोषं मृगराडिवोद्धतः [ ट ]
एतस्मिन्नेव काले तु गगनात्सूर्यवर्च्चसौ )

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एतदर्थं इति। मे मम अवतारः एतदर्थः एष अर्थः प्रयोजनं यस्य तथाभूतः। कोऽसावर्थ इत्यपेक्षायां भूभारेत्यादिभिश्चतुर्थ्यन्तैः प्रयोजनविशेषान्निर्दिशति–भूभारहरणाद्यर्थमयमवतारः कृत इत्यन्वयः। अन्येषामसाधूनां वधाय च ॥ ९ ॥

नेदं प्रयोजनविशेषपरिगणनमपि तु प्रदर्शनमात्रमित्यभिप्रेत्याह–अन्योऽपीति। अन्योऽप्यवतारस्यार्थः प्रयोजनं कोऽसावतस्तं दर्शयति– धर्मरक्षाया इति। अन्योऽपीति एकवचनंसामान्याभिप्रायकं काले कदाचित क्वचित्प्रभवतः प्रकर्षेण भवतो वर्द्धमानस्य अधर्मस्य विरामाय विध्वंसनाय च मया देह सम्भ्रियते परिगृह्यते ॥ १० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अन्योऽपि वाराहादिरपि स्वकाले प्रभवतः वर्द्धमानस्य विरामाय विनाशाय ॥ १० ॥

मथुरां योग्यानां परमानन्ददात्रीं वेदान्तविद्यां तस्याश्चतुर्द्वाराणि ऋगादीनि पाषण्डशैववीरादयः लिङ्गादिशब्दिता बहवः सैनिकाः सेनारक्षकाः यस्य स तथा "सेनारक्षाश्च सैनिकाः" इत्यमरः ॥( क—झ )

क्ष्वेलन्तः अट्टहासं कुर्वन्तः ॥ ( ञ ) ॥

कदम्बः समूहः ॥ ( ट ) ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ननु, कथं सर्वेषां वधार्थं प्रयत्नो ब्रह्मणः सर्वात्मनः तत्राह, एतदर्थोऽवतारोऽयमिति मलप्राया व्याधिप्राया दैत्या इति तन्निराकरणेन सर्वात्मत्वं भज्यते उच्छूनः स्वावयवोऽपि छिद्यत इति अत एव भगवान् स्वयं पुरुषरूपं प्राप्य तत्र दोषरूपान् दैत्यान् हन्तुं स्वयमेवौषधरूप आविर्भूतः तदाह, एतदर्थोऽवतारोऽयमिति। वैषम्यलक्षणो हि दोषो लौकिकः स यत्र दोषत्वं न भजते स दोषो न भवति अक्लिष्टकर्मत्वं तु पूर्वमेव परित्यज्य समागतमित्यङ्गीकृता ग्लानिर्न दोषायेति न्यायेन न दूषणं भवति स्वतश्चोद्यम्य न हन्यते निष्कपटेन युद्धार्थमागतं निष्कपटेन युद्धे न हन्तव्यमिति मे अवतारः एवंभूतो धर्म्यो वधो दोषाय न भवतीति धर्मार्थमप्येतद्वधं करिष्यामीत्याह—संरक्षणाय साधूनामिति। कृतत्वाच्च करणं प्रकारान्तरेण साधुरक्षा कर्त्तव्येत्याशङ्कयाह—अन्येषामपि वधायेतीति। चकाराद्भक्तिस्थापनार्थं ततः कार्यचतुष्टयार्थमवतारः इत्युक्तम्भवति भूभारहरणार्थं साधुरक्षार्थं दुष्टनिराकरणार्थं भक्तिप्रवर्त्तनार्थं चेति समप्रधानं चतुष्टयं नत्वेकमन्यार्थं भूभारनिराकरणार्थे राजसं रक्षा सात्त्विकी निग्रहः तामसः भक्तिर्निर्गुणेति न हि दुष्टहनने भूभारो गच्छति पुनरुत्पत्तिसंभवात् हननार्थमेव प्रयत्ने तु भगवतस्तात्पर्याद्धता एव भवन्ति न पुनरुत्पद्यन्ते मुक्ताश्च भवन्ति एवमेव सद्रक्षायामपि असत्संसर्गात् सतामप्यसत्तापत्तौ सर्ववधे अनिष्टमेव स्यात् अतस्तेषां बुध्यादिबाधकमेव दूरीकर्त्तव्यमिति सद्रक्षापि स्वतन्त्रैव भक्तेरननुप्रवेशः स्पष्ट एव तदाह, अन्येषां वधायचेति ॥ ९ ॥

साम्प्रतप्रवेशस्य प्रयोजनचतुष्टयमुक्त्वा पक्षपातलक्षणो धर्मः पूर्वमपि मयि वर्त्तत इति सृष्ट्यादावेव तथाङ्गीकारात् न दोषायेति वक्तुं पूर्वमपि धर्मरक्षार्थं मयावताराः क्रियन्त इत्याह—अन्योऽपि धर्मरक्षाया इति। एतद्व्यतिरिक्तानामवताराणां धर्मरक्षा अधर्मनिवृत्तिश्च फलम् एतदेवाभिप्रेत्याह—यदा यदा हि धर्मस्येति। नत्वयमवतारो धर्मरक्षार्थः केवलः अपिशब्दात्सोऽपि गृह्यते ततश्च षट् प्रयोजनानि भविष्यन्ति अधर्मनिराकरणं धर्मरक्षा चेति अत्रापि पूर्ववदुभयं प्रमाणम् अत एव संस्थापनाय धर्मस्येत्यपि

एवं ध्यायति गोविन्द आकाशात्सूर्यवर्चसौ ।
रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥ ११ ॥
आयुधानि च दिव्यानि पुराणानि यदृच्छया ।
दृष्ट्वा तानि हृषीकेशः सङ्कर्षणमथाब्रवीत् ॥ १२ ॥
पश्यार्य ! व्यसनं प्राप्तं यदूनां त्वावतां प्रभो ! ।
एष ते रथ आयातो दयितान्यायुधानि च ॥ १३ ॥
( १ ) यानमास्थाय जह्येतद्व्यसनात्स्वान् समुद्धर ।
एतदर्थं हि नौ जन्म साधूनामीश ! शर्मकृत् ॥ १४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वाक्यमविरुद्धम् अत एव बुद्धावतारे केवलधर्मरक्षैव प्रयोजनं कल्क्यवतारे अधर्मनिवृत्तिरेव परशुरामावतारे दुष्टनिग्रह एव बलभद्रे भूभारहरणमेव । पृथ्ववतारे सत्परिपालनमेव । एवं सर्वत्र यथायथमूह्यं सर्वाणि तु भगवत्येव भक्तिश्च स्वतन्त्रा अधिका, नन्वेतत्सर्वं कालकर्मादिभिरेव स्वतन्त्रतया आज्ञया वा सिध्यतु किंविविशेषावतारेणेत्याशङ्कायामाह—काले प्रभवत इति । धर्माधर्मौ कश्चिदेव काले प्रभवतः अतो यदा अनपेक्षितः तदा अवतीर्य निराकरणं स्थापनं वा कर्त्तव्यं कालस्तु जनक एवेति न तेन तन्निराकरणं नियतस्योभयशक्तित्वाभावात् तस्मादवश्यं वैषम्यं क्लिष्टकर्मत्वं च भक्त्याद्यनुरोधेन कर्त्तव्यमिति ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एतदर्थोऽवतारः कृतः अर्थं विवृणोति—भूभारेति । अन्येषामसाधूनाम् ॥ ९ ॥

अन्योऽपि देहो वाराहादिः ॥ १० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सूर्यवर्चसौ प्रकाशात्मकौ ससूतौ सारथिसहितौ परिच्छदः परिकरं ध्वजकवचादिस्तत्सहितौ उपस्थितौ तदिच्छयैव निजलोकादागत्य समीपे स्थितौ ॥ ९ ॥

दिव्यान्यमानुषाणि पुराणानि पुरापि नवानि । अनादिसिद्धानीत्यर्थः । आयुधावतरणप्रकारः । हरिवंशे—

ततः खान्निपतन्ति स्म दिव्यान्याहवसङ्कुले ।
लेलिहानानि दीप्तानि महान्ति सुदृढानि च ॥
क्रव्यादैरनुयातानि मूर्तिमन्ति बृहन्ति च ।
तृषितान्याहवे भोक्तुं नृपमांसानि वै भृशम् ॥
दिव्यस्रग्दामधारीणि त्रासयन्ति च राक्षसान् ।
प्रभया भासमानानि पतमानानि चाम्बरात् ।
हलं सम्वर्तकं नाम सौनन्दं मुसलं तथा ।
धनुषां प्रवरं शार्ङ्गं गदा कौमोदकी तथा ।
चत्वार्येतानि तेजांसि विष्णुप्रहरणानि च ।
ताभ्यां समवतीर्णानि यादवाभ्यां महामृधे
जग्राह प्रथमं रामो ललामप्रतिमं हलम् ।
सर्पन्तमिव सर्पेन्द्रं दिव्यमाताकुलं मृधे ।
सौनन्दं च ततं श्रीमान् निरानन्दकरं द्विषाम् ।
सव्येन सात्वतां श्रेष्ठो जग्राह मुसलोत्तमम् ।
दर्शनीयं च लोकेषु धनुर्जलदनिस्वनम् ।
नाम्ना शार्ङ्गमिति ख्यातं कृष्णो जग्राह वीर्यवान् ।
देवैर्निगदितार्थस्य गदा तस्यापरे करे ।
निक्षिप्ता कुमुदाक्षस्य नाम्ना कौमोदकीति सा इति ॥

प्रकरणान्तरे । तत्रैव श्रीसुदर्शनाद्यागमनं प्रोक्तं श्रीपाञ्चजन्यप्राकट्यं प्राक् प्रदर्शितमेव ॥ १० ॥

---

भाष टीका ।

और इसी प्रयोजन के लिये तो यह हमारा अवतार है कि—पृथिवी के भार को उतारना, और साधुजनों की रक्षा करनी, तथा साधु जनों को दुःख देने वाले जो असुर हैं तिनका वध करना ॥ ९ ॥

औरभी धर्म की रक्षाके लिये हम देह धारण करते हैं तथा किसी काल में होने वाले अधर्म के विराम ( नाश ) करने के लिये भी देह धारण करते हैं ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ससूतौ सारथिसहितौ परिच्छदः परिकरो ध्वजकवचादिस्तत्सहितौ ॥ ११-१२ ॥

त्वमेवावन् रक्षको नाथो विद्यते येषां ते त्वावन्तस्तेषाम् ॥ १३—१४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवमिति सार्द्धकम् । गां पृथ्वीं विन्दतीति गोविन्दः इति

---

( १ ) एनमिति वीर० वि० ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भूभारहरणार्थं साक्षादवतीर्णो भगवानित्यर्थः । तस्मिन् आकाशात् दूर्द्ध्वलोकात् तदीयमहावैकुण्ठादित्यर्थः ॥ ११ ॥

दिव्यानि लोकातीतानि यतः पुराणानि पुरापि नवानि नित्यानीत्यर्थः । यदृच्छया स्वैरितया आनयनादिप्रयत्नं विनैवोपस्थितानि इति तेषां भगवदभिप्रायज्ञत्वेन चेतनाभिप्रेता । यद्यपि —

"हलं सम्वर्त्तकं नाम सौनन्दं मुसलन्तथा ।
धनुषां प्रवरं शार्ङ्गं गदां कौमोदकीं तथा" ॥

इति श्रीहरिवंशे तथा श्रीविष्णुपुराणे चतस्रोऽप्येवायुधान्युक्तानि तथाप्यत्र श्रीभगवतश्चक्रं श्रीबलदेवस्य धनुरादिकमपि ज्ञेयं योगात्वादन्यत आगमनाश्रवणाच्च अतएवाग्रे एष ते रथ आयातो दयितान्यायुधानिचेति बहुत्वं । दृष्ट्वेत्यर्द्धकं हृषीकेशः विनैव वचनेन सर्वं प्रवर्त्तयितुं समर्थोऽपि सङ्कर्षणं दृष्टिमात्रेण सर्वं नाशयितुं समर्थमपि अथ कार्त्स्न्येनाब्रवीत् लीलाकौतुकावेशेन युक्तिपूर्वकमेव बभाष इत्यर्थः ॥ १२ ॥

पश्य अवधेहि तत् किं व्यसनमिति त्वावतामित्यत्रात्वमार्षं किञ्च, एष इति । आर्येति सादरसम्बोधनं स्वभावात् प्रभो इति वक्ष्यमाणनिर्णयसामर्थ्यबोधनाय । दयितानीति स्वतः सामर्थ्यव्यञ्जीकारावश्यकं सूचयति ॥ १३ ॥

निर्णयमाह—यानमिति । एतत् सैन्यं जहि तन्मुख्यप्रयोजनमादिशति व्यसनादिति स्वान् सकलसाधुजनालम्बनरूपान् परिकरान् सम्यगक्षतत्वादिनोद्धर । एतच्चावश्यकार्य्यमित्याशयेनाह—एतदिति हि यस्मात् यत एवान्येषाञ्च साधूनां शर्म्मकृद्भवेदित्यर्थः । हे ईशेति प्रोत्साहनम् ॥ १४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

त्वावतां त्वया नाथवतां संहारान्निवर्त्तितुमिति शेषः ॥१३—१८॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । ध्यायति विचार्य्य निश्चितवति सति तदैव द्वौ रथावाकाशादवतीर्योपस्थितौ स्तः कथम्भूतौ सूर्यस्येव वर्चो ययोस्तौ सारथिसहितौ परिच्छदः परिकरो ध्वजकवचादिस्तत्सहितौ ॥ ११ ॥

अथ हृषीकेशः पुराणानि पुरातनानि दिव्यान्यमानुषाण्यायुधानि चकारात् तैस्सहितौ रथौ च दृष्ट्वा सङ्कर्षणं प्रत्युवाच ॥१२ ॥

उक्तिमेवाह—सार्द्धद्वयेन । हे आर्य हे प्रभो ! यदूनां व्यसनं प्राप्तम् एतत् पश्य नैते यदव उपेक्ष्या इत्यभिप्रायेण तानेव विशिनष्टि— सात्वतामिति । सात्वतां भक्तानां भृत्यानामितियावत् न हि स्वामिभृत्यानुपेक्षितुमर्हतीति भावः । तर्हि किंविधेयमित्यत्राह— एष इति । दयितानि प्रियाण्यायुधानि चकारात् कवचादीनि च आयातानीति लिङ्गवचनविपरिणामः ॥ १३ ॥

एनं रथमास्थायाऽधिष्ठायैतत्परबलं जहि नाशय स्वान् स्वकीयान् व्यसनादापद उद्धर एतदर्थं प्रतिपक्षनिरसनार्थं हि इह लोके नावायोर्जन्मावतारः यद्वा नौ जन्म एतत्प्रतिपक्षनिरसनमर्थः प्रयोजनं यस्य तत्तथा साधूनां शर्मकृत् सुखकारि च ॥ १४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सपरिच्छदौ सोपस्करणौ ॥ ११—१२ ॥

(*चक्रं सुदर्शनं घोरं सहस्रारं मनोरमम् ।
गदा कौमोदकी गुर्वी नाम्ना कौमोदकी शुभा ॥ × ॥
त्रिनतं कार्मुकश्रेष्ठं शार्ङ्गसंज्ञं गुणान्वितम् ॥
तीक्ष्णधारः शितमुखः खड्गो नन्दकसंज्ञितः ॥ ९ ॥
लघूशराचितौ रम्यौ तूणौचाक्षयसायकौ ॥
तुरगाः शैब्यसुग्रीवमेघपुष्पबलाहकाः ।
हलं च बलभद्रस्य मुसलं च दृढं गुरु ॥
इत्येतान्यायुधान्याजौ गगनादागतानि सः ।
सहस्रमराणि दलानि यस्य तत्तथा ॥ × ॥

कौ मह्यां मोदको नारायणः तस्य विद्यमाना कौमोदकी त्रिषु स्थानेषु कोटिद्वये मध्ये च नतं वक्रं त्रिनतं "कार्मुकं तु चतुर्हस्तम्" इति यादवः शार्ङ्गं श्रृङ्गविकृतं गुणेन ज्यया अन्वितं सहितम् ॥९॥

त्वावतां त्वद्युक्तानाम् । यद्वा, त्वम् अवः रक्षको येषां ते त्वावन्तः तेषां त्वावतामिति पाठश्छान्दसः साधूनां साधुभिः सत्कृतं कृयोगे षष्ठी ॥ १३ ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आकाशात् ऊर्द्ध्वलोकात् तदीयमहावैकुण्ठादित्यर्थः ॥ ११ ॥

हृषीकेशः विनैव वाण्या सर्वं प्रवर्त्तयितुं समर्थोऽपि सङ्कर्षणं दृष्टिमात्रेण सर्व्वं नाशयितुं समर्थमपि अथ कार्त्स्न्येनाब्रवीत् । लीलाकौतुकावेशेन युक्तिपूर्व्वकमेव बभाष इत्यर्थः ॥ १२—२६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवद्ध्यानमात्रेण भूमिष्ठानां पदार्थानां दैत्यांशवासितत्वात् तेषां सज्जीकरणे विलम्बात् वैकुण्ठादेव साध्ये स्मृते स्वयमेव साधनमागतमित्याह—एवं ध्यायतीति ॥ सर्वे हि देवाः अधिकारन्यायेनापि भगवद्वशा इति ज्ञापयितुं गोविन्द इति आकाशात्सर्वेषाम् अलौकिकत्वज्ञापनाय दृष्ट एवालौकिकज्ञानं भवतीति दर्शनार्थं सूर्यसङ्काशत्वमाह सूर्यवर्चसाविति न हि सूर्यं कदाचिदुदितं न पश्यति अनेन अक्लिष्टकर्मताप्युक्ता स्वानां भयञ्च निवारितम् अलौकिकतया गमनं दृष्ट्वापि यदि युद्धार्थं यतन्ते तदा मृत्युं निश्चित्यैव यतन्त इति न भगवद्दोषः कश्चन यथा धनुर्भङ्गादिसामर्थ्यप्रदर्शनं तथैतदपि सद्य एवोपस्थिताविति सिद्धाविव समागतौ ननु

* एते श्लोका अधिकं पठ्यन्ते मूले ।

त्रयोविंशत्यनीकाख्यं भूमेर्भारमपाकुरु।
एवं सम्मन्त्र्य दाशार्हौ दंशितौ रथिनौ पुरात् ॥ १५ ॥
❀ ( दंशितैश्च यदुश्रेष्ठैर्बहुभिश्च समन्वितौ।
निर्जग्मतुः पुरवराद्बलेनाल्पीयसा नृप ॥ )

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

लक्ष्मीवत् रुक्मिण्यादिभावेनोत्पत्तिरपेक्षते यद्यप्यलौकिकरथस्य न सूताद्यपेक्षा तथापि तदभावे शोभार्थं वा सूतः कर्तव्य इति प्राकृते स्थापिते तदनुरोधानुरोधाभ्यां कार्यभावः अतः ससूतौ युद्धादिसामग्रीकवचादिर्ध्वजादिश्च परिच्छदशब्देनोच्यते ॥ ११ ॥

सायुध एव रथमारोहतीति पृथगायुधानामागमनमाह आयुधानि चेति। धनुःखड्गादीनि दिव्यानि शार्ङ्गप्रभृतीनि भिन्नान्याकृतिमन्ति निषेधति पुराणानीति केनचिन्नानीय दत्तानि किन्तु यदृच्छया स्वयमेवागतानि एवं सामग्रीं दृष्ट्वा कार्यषट्के भूभारहरणस्योपस्थितत्वात् तदर्थमेव बल भद्रस्यागतत्वात् बलभद्रं प्रत्याह—दृष्ट्वा तानीति। यद्युक्तं न करिष्यति तथाप्यवतारान्यथानुपपत्त्या तथैव प्रेरयिष्यामीत्यभिप्राय इत्याह—हृषीकेश इति। सर्वेन्द्रियप्रेरकः तथैव प्रेरयिष्यतीति सङ्कर्षणः सम्यक् भारमाकृष्य दूरीकर्तुं समर्थः ॥१२॥

अथ विचारव्यतिरेकेण निर्द्धारितमेवाह—पद्भ्यार्येति। एकान्ते स्थित्वा तावुभौ अतो यथा लोके परिज्ञानं न भवति तथा शनैर्वचनानि त्रिभिः आर्येति सम्बोधनं कृतानुकरणत्वाभावाद्वक्तव्यत्वज्ञापकं त्वत्त एव अवनं येषां ते त्वावन्तः अतो रक्ष्याणां व्यसनं प्राप्तमिति तन्निराकरणमवश्यं कर्त्तव्यं रक्षाप्यवश्यं कर्त्तव्येत्याह—यदूनामिति। अप्रतिकार्यं दुःखं व्यसनमित्युच्यते यद्यपि पूर्वमेव विचारः कर्त्तव्यः तच्च कृतमित्यवैचित्यमपि ज्ञापयन्नाह प्राप्तमिति सामर्थ्यन्तु वर्त्तत इत्याह—प्रभो इति. अवताराणां गुणव्यवधानात् साधनानि बोधयति "एष ते रथ आयातः" इति भवदीय एवायं रथ इति साधने सन्देहाभावः प्रियाणि च मुसलादीनि आयुधानि चकारादपेक्षितं सर्वम् ॥ १३ ॥

भूभारहरणं तस्यैव मुख्यमिति तमेव बोधयति यानमास्थायेति रथमास्थाय एतद्बलं जहि रथारोहणे सर्वा शक्तिः प्रादुर्भविष्यतीति विलम्बाभावायाह व्यसनात् स्वान् समुद्धरेति आवश्यकत्वस्याप्यावश्यकतामाह एतदर्थं हि नौ जन्मेति आवयोर्जन्म एतदर्थं युक्तश्चायमर्थः भूम्या प्रार्थितमिति अन्यथा जन्मैव न स्यात् सर्वत्रानुस्यूतं प्रयोजनमाह साधूनां शर्मकृदिति साधूनां सुखमसाद्भवतीति सर्वैरेव प्रकारैस्तैः सुखिनो भवन्तीति महतः आविर्भूतस्यैतदेव कृत्यम् ईशेति सामर्थ्यम् अन्यथोपेक्षादोषो भविष्यतीति भावः ॥ १४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

उपस्थितौ तदिच्छयैव वैकुण्ठादागत्य निकटे स्थितौ ॥११-१२॥

त्वं नाथो विद्यते येषां ते त्वावन्तस्तेषां दकारस्यात्वमार्षम् ॥ १३-१६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

त्वं स्वामी विद्यते येषां ते त्वावन्तः तस्यात्वमार्षम् तेषां व्यसनं प्राप्तम्। न हि स्वामिना भृत्या उपेक्षितव्या इति भावः (११—१२) ॥ १३ ॥

एतत् परसैन्यम्. शर्मकृत्सुखकृत् ॥ १४ ॥

भाषाटीका।

भगवान् श्रीकृष्णचन्द्र तो ऐसा विचार करते ही रहे इतने में आकाश से सूर्य के सदृश कांति वारे दो रथ उतर कर उपस्थित भये कि-जिन में सब अस्त्र शस्त्र भरे हुए और सारथियों सहित और सब सामग्री जिनमे भरी भई है ॥ ११ ॥

उन दोनो रथों को तथा उनमें प्राचीन दिव्य आयुधों को देखकर श्रीकृष्ण सङ्कर्षण (श्रीबलदेवजी) से बोलते भये ॥ १२ ॥

श्रीकृष्णचन्द्र बोले, कि— हे आर्य! हे प्रभो! आप जिन के रक्षक ऐसे यदुलोगों को आज बड़ा व्यसन (दुःख) प्राप्त भया, और यह आप का रथ भी आयगया तथा प्रिय आयुध भी आकर प्राप्त भये हैं ॥ १३ ॥

तिस से आप अब उस रथ पर बैठकर इस शत्रु सेना का नाश करौ, और अपने जनों को इस दुःख से बचाओ क्योंकि ? इसी प्रयोजन के लिये अपने दोनों का जन्म हैं। हे ईश! कि साधु जनो का कार्य किया जाय ॥ १४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दंशितौ बद्धकवचौ ॥१५॥

❀ एतेश्लोका विजयध्वजीयपाठाः ॥

निर्गत्य सदनात्कृष्णो वृष्णीनाहूय सर्वशः।
आज्ञापयामास तूर्णं चतुर्द्वारस्य पालने ॥
वसुदेवं च निशठं कृतवर्माणमुद्धवम्।
कृष्णा निर्यातयामास पूर्वद्वारेण भारत! ॥ × ॥
उग्रसेनं सुदामानं पृथुं विपृथुमेव च।
हरिर्निर्यातयामास द्वारेणानुत्तरेण वै ॥
सात्यकिं च गदं चैव प्रसेनं गान्दिनीसुतम्।
हरिः प्रतीचीद्वारेण प्रेषयामास दुर्मदान् ॥ ७ ॥
गोविन्दस्तु महातेजाः स्वयं दारुकसारथिः।
आत्ताभीष्टप्रहरणः सङ्कर्षणसहायवान् ॥
उत्तरेण विनिर्गत्य द्वारेण जगदीश्वरः।
शङ्खं दध्मौ महाप्राणं दैत्यदानवभीषणम् ॥ ® ॥
आह दारुकमासीनं रथाग्रे माधवः स्मयन् ॥

श्रीभगवानुवाच।

रथं वाहय धर्मज्ञ! यत्र तौ चैद्यमागधौ।
तर्पयामि नृपान् सर्वान् सायकैर्युद्धदुर्मदान् ॥

श्रीशुक उवाच।

इत्युक्तो दारुकस्तेन हयांस्तूर्णमचोदयत्।
व्यनदत्सिंहनादं च गोविन्दः परवीरहा ॥
शङ्खमाध्माय रामोऽपि सिंहनादं व्यनीनदत्।
ततोऽभूत् परसैन्यानां हृदि चिन्ता सवेपथुः ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

आवश्यकतार्थमेव सैन्यस्य हननस्य च वैशिष्ट्यमाह— अर्द्धकेन त्रयोविंशतिरनीकानि अक्षौहिण्यः तदाख्यं तावत्सङ्ख्यमित्यर्थः। यद्वा त्रयोविंशतिः अक्षौहिण्यः तत् सङ्ख्याकमनीकं सैन्यमित्याख्या यस्य तं भावरूपं दाशार्हाविति मनुष्यलीलापरत्वमभिप्रेतम् अत एव दंशितौ। अल्पीयसेति जरासन्ध बलाद्यदुबलस्याल्पताभिप्रायेण तत्रापि हरिवंशोक्तविकद्रुदुर्म्मन्त्रणया सर्वेषामागमनेन च अतएवावृतौ आवरणतया चतुर्दिक्षु वेष्टितौ स्वैर्निजनिजायुधैराढ्यौ युद्धे सम्पन्नौ तत्तदायुधदर्शनायैव परसैन्यं क्षोभयन्तावित्यर्थः। विशेषेण सर्वतो वैलक्षण्येन निर्गत्य यतो दारुकसारथिः तत् सारथित्वोपलक्षणया विख्यातिदिव्यतद्रूप्यादिसम्पत्तिमान् हरिरिति शङ्खध्वनिनैव परेषां वीर्य्याविहरणाभिप्रायेण ॥ १५—१६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अतस्त्रयोविंशत्यनीकाख्यं त्रयोविंशत्यक्षौहिणीसैन्यव्यपदेशं केवलं भूमेर्भारमपाकुर्वपनय। एवमिति। इत्थं मिथः सम्मन्त्र्य आलोच्य दाशार्हौ रामकृष्णौ दंशिनौ कवचितौ रथिनौ रथारूढौ स्वासाधारणैरायुधैराढ्यौ युक्तौ चाल्पीयसा कतिपयेन बलेन चावृतौ च भूत्वा पुरान्मथुराया निष्क्रान्तौ। ततो हरिर्दारुकाख्यः सारथिर्यस्य सः तथाभूतः शङ्खं पाञ्चजन्यं दध्मौ ध्वनयामास ॥ १५—१६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

त्रयोविंशत्यनीकानां त्रयोविंशदक्षौहिणीनां समुत्पन्नं भूमेर्भारम् ॥ १५ ॥
अक्षसूत्रादयो वसुदेवादिशब्दवाच्याः ॥ + ॥

पूर्वद्वारि नृपैः सार्द्धं यदूनां कदनं महत् ।
आसीच्चतुर्भिरष्टानां तदद्भुतमिवाभवत् ॥ ४ ॥
दक्षिणद्वार्यपि तथा गोविन्दाध्मातचेतसाम् ।
आसीद्यदूनां कदनं राजन्यकटकेन वै ॥८॥
अपरद्वार्यपि तथा यदूनां दृढधन्विनाम् ।
आसीद्राजसमाजेन सङ्ग्रामो रोमहर्षणः ॥
ते हन्यमाना यदवो राजभिः शक्रविक्रमैः ।
न चेलुः सङ्गराद्राजन् ! लोकद्वयजिगीषवः ॥
तत्र यादवशार्दूलो विष्णुस्त्रैलोक्यवल्लभः ।
आससाद महाघोरौ यत्र तौ चैद्यमागधौ ॥ )
निर्जग्मतुः स्वायुधाढ्यौ बलेनाल्पीयसा वृतौ ।
शङ्खं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः ॥ १६ ॥
ततोऽभूत्परसैन्यानां हृदि वित्रासवेपथुः ।
तावाह मागधो वीक्ष्य हे कृष्ण ! पुरुषाधम ! ॥ १७ ॥
न त्वया योद्धुमिच्छामि बालेनैकेन लज्जया ।
गुप्तेन हि त्वया मन्द ! न योत्स्ये याहि बन्धुहन् ! ॥ १८ ॥
तव राम ! यदि श्रद्धा युद्ध्यस्व धैर्यमुद्वह ।
हित्वा वा मच्छरैश्छिन्नं देहं स्वर्याहि मां जहि ॥ १९ ॥
श्रीभगवानुवाच ॥
न वै शूरा विकत्थन्ते दर्शयन्त्येव पौरुषम् ।
न गृह्णीमो वचो राजन्नातुरस्य मुमूर्षतः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुःखं मन्दयन्ति अल्पीकुर्वन्तीति दुर्मदास्तान् नुमागमाभावश्छान्दसः+ महाप्राणं महाघोषम् ॥ ॥ युद्धदुर्मदान् युद्धे दुष्टमदान् ॥ ॥ वसुदेवादिभिश्चतुर्भिः कलिङ्गाद्यष्टानां "कदृक्षद हिंसार्थौ" इतिधातुः कदनं युद्धम् ॥४॥ गोविन्देनाध्मातमाश्वासितं चेतो येषां ते तथा तेषां राजन्यानां कटकेन सैन्येन सैन्येपि कटकोऽस्त्रियामित्यभिधानं समूहेनवा ॥८

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

परिमितमेवेति प्रयासाभावायाह त्रयोविंशत्यनीकाख्यमिति अनीकशब्देनाक्षौहिणी अल्पसङ्ख्याशब्दनिर्देशः अनायासेन निराकरणार्थः त्रयोविंशत्यनीकान्याख्या नाममात्रं यस्य वस्तुतस्तु न किञ्चित् तथापि निराकर्त्तव्यमेवेत्याह भूमेर्भारमिति॥ १५॥

---

श्रीच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दंशितौ बद्धकवचौ ॥ १५ ॥

---

भाषाटीका ।

यह तेईस अक्षौहिणी रूप भूमि के भार को दूर करें दशार्हवंशी श्रीराम कृष्ण ऐसे विचार करके कवच धारण कर रथ पर बैठ कर अपने आयुधो सहित थोड़ी सी सेना लेकर पुर से निकसते भये , और बाहर निकस कर दारुक जिन का सारथि ऐसे हरि शंख बजावते भये ॥ १५—१६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वायुधाढ्यौ शोभनायुधसम्पन्नौ ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पुरुषा अधमा यस्मादिति वास्तवोऽर्थः हे पुरुषोत्तमेति ॥१७॥ गुप्तेन सर्वान्तरत्वाद्दर्शनानर्हेण हे ऽमन्द ! बध्नातीति बन्धुरविद्या तां हन्तीति तथा हे अविद्यानिरसनेति याहि प्राप्नुहि ॥१८॥

अच्छेद्यदेहोऽसाविति स्वयमेव मत्वा परितोषात्पक्षान्तरमाह, यद्वा मां जहीति ॥ १९ ॥

यथाश्रुतार्थग्रहणेन भगवत उत्तरं न वै शूरा इति विकत्थन्ते श्लाघन्ते ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत एव विशिष्टत्रासेन वेपथुः । श्रीकृष्णं साक्षात् कालरूपं मत्वा तेन सह युद्धं परिहर्तुमाह—ताविति सार्द्धेन ॥ १७ ॥

बालेनैकेनेति बालकेनैवेति च वा पाठः । ननु, युद्धे शक्तिरेवापेक्ष्यते न तु वयः इत्याह—गुप्तेनेत्यर्द्धकेन । कंसभयेन गोकुले निवासात् । ननु, वैरिवञ्चनार्थं काले गुप्तिरेव योग्येत्यत आह, मन्द ! हे अभद्रेति । कुतः हे बन्धुहन् ! अतो याहि धर्मयुद्धादितोऽपसर तत्त्वार्थस्तैर्व्याख्यातः । यद्वा, याहि स्वगृहं याहि युद्धश्रमेण ते प्रयोजनाभावादिति भावः ॥ १८ ॥

तवेति । त्वञ्चेति वा पाठः । त्वर्थे चशब्दः श्रद्धा युद्धेच्छा यु...ति मद्भयानुभवितैव यदि कथञ्चित् स्यादित्यर्थः । स्थैर्यं मुखवैद्रुबलादात्मानं प्रापय न जातूद्विग्नो भव न च पलायस्वेत्यर्थः । धैर्यमिति क्वचित् पाठः ॥ १९ ॥

आत्मना सह युद्धकौतुके तं प्रवर्त्तयितुं व्यक्तार्थमेवाश्रित्य सोल्लुण्ठमुत्तरमाह—नेति । न विकत्थन्ते नात्मानं श्लाघन्ते वै एतत् प्रसिद्धमेवेत्यर्थः । नच तव गालिप्रदानेन वयं क्षुभ्याम इत्याह—नेति । आतुरस्य वातादिदोषव्याकुलस्य तत्रापि मुमूर्षतः सम्प्रत्येव मरिष्यतः वचो न गृह्णीम न वस्तु बुद्ध्या भावयामः कुतः कोपं कुर्म्म इत्यर्थः । राजन्निति यद्यपि राज्ञस्त्वेतदतीवानुचितमिति भावः ॥ २० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मा जहि मां वा जहि ॥ १९ ॥

मुमूर्षया आतुरस्य तवेत्यर्थः ॥ २०—२२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः शङ्खध्वनात्परसैन्यानां हृदि वित्रासो भयं तेन वेपथुर्गात्रकम्पो बभूव । ताविति । तौ रामकृष्णौ अवलोक्य मागधो जरासन्ध आह; उक्तमेवाह—कृष्णेत्यादिना । गुप्तेन कर्त्तरिक्तः गोपयता आत्मानमिति शेषः स्वजनेनेति वा त्वया सह न योत्स्ये न युद्धं करोमि याहि गच्छ तत्र कारणं वदन् सम्बोधयति—हे मन्द, मूढ ! तत्र हेतुः हे बन्धुहन् ! अत एव हे पुरुषाधम ! बन्धुर्मातुलस्तस्य हन्तः ॥ १७ ॥

न केवलं न योत्स्याम्येवापितु त्वया योद्धुं नेच्छाम्यपि यथा बालकेन सह लज्जया न युयुत्स्ये तद्वदित्यर्थः ॥ १८ ॥

अथ राममाह—त्वमिति । यदि श्रद्धा युद्धार्थमस्तीति शेषः तर्हि हे राम ! युद्धस्व स्थैर्यमावह न तु प्रारभ्य पलायस्वेति भावः । एवं वेन्मच्छरैर्भिन्नं देहं त्यक्त्वा स्वर् स्वर्गं याहि याह्यसीत्यर्थः । यद्वा, समर्थश्चेत्त्वं मामेव जहि इति ॥ १९ ॥

एवमुक्तः प्राह भगवान्—नहीति । विकत्थन्ते विविधम् आत्मानं न श्लाघन्ते शूराः किन्तु रिपूणामपि श्लाघ्यं पौरुषमेव दर्शयन्ति अतस्तवाशूरस्य मुमूर्षतः मर्तुमाशंसमानस्य अत एवातुरस्य वचो वयं न गृह्णीमः न बहुमन्यामहे इत्यर्थः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ १६—२४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रकटतया कथने राजा निर्गच्छेत् स्नेहाद्वसुदेवादयः प्रतिबन्धं कुर्युः अत एकान्ते तथा सम्मन्त्र्य युद्धार्थं प्रवृत्ताविस्याह—एवं सम्मन्त्र्येति । यतो दाशार्हौ सेवकप्रियौ दर्शितौ पूर्वं बद्धकवचौ ततो रथिनौ ततः पुरान्निर्जग्मतुः ततः सुष्ठु आयुधाढ्यौ आयुधं गृहीत्वा युद्धार्थं प्रवृत्तौ तावता पूर्वं राजाज्ञाभावात् विचाराभावाच्च न सर्वं बलमेकीभूतमतोऽल्पेनैव बलेनावृतौ जातौ तत्राप्यङ्गवैकल्यं प्रत्ययार्थः आदौ पाञ्चजन्यं वादितवानित्याह—सैन्यानामुद्योगोत्साहनिवृत्त्यर्थम् । "यस्य ध्वनिर्दानवदर्पहन्ता" इति अन्तःप्रवेशाभावाय बहिर्निर्गम्य शङ्खं दध्मौ यतो हरिः अन्यथा पुरस्थानां शङ्का स्यात् दारुकः सारथिर्यस्येति सङ्कर्षणांश एवात्र विशेषाकारेण प्रवृत्त इति ज्ञापयितुं तृतीये प्रकरणे तस्याप्युपयोगः सूचनीयः यथा द्वितीये अनिरुद्धे सान्त्वनम् ॥ १६ ॥

अग्रे आयुधान्तराणामपि कार्यं भविष्यतीति ज्ञापयितुं कृतस्य नादस्य फलमाह—ततोऽभूदिति । शत्रुभूतानां सैन्यानां भाविमरणमदूरे प्रतिभातमिति हृदि विशेषेण त्रासो भयं जातं तेन कम्पश्च शरीरेऽप्यभूत् एवं ज्ञात्वा चतुरो जरासन्धः भगवन्तं युद्धान्निवर्त्तयितुं किञ्चिदुक्तवानित्याह—तावाहेति । ननु, सदुत्तरेणैव भगवता सह युद्धमनुचितमिति चेद्वदेत् तदा भगवान् युद्धं न कुर्यात् स्वकार्यं च भवेत् तत्परित्यज्य किमिति विषममुक्तवानित्याशङ्कायामाह मागध इति । देशदोषात्तथा बुद्धिः वीक्ष्याहेति तेजसाऽनुभवेन ज्ञात्वेत्येतदर्थम् आदौ भगवता सह युद्धं न मन्यते तदाह, हे कृष्णेति । त्रिधा सम्बोधनं करोति आनन्दचित्सद्रूपैः कृष्ण आनन्दपुरुषश्चिद्रूपः अधो मातीत्यधमः प्रपञ्चः सद्रूपः न हि सदानन्दरूपेण पुरुषार्थरूपेणात्मना स्वोपकारिणा कश्चिद्युद्धमभिकाङ्क्षते ॥ १७ ॥

अत आह—न त्वया योद्धुमिच्छामीति । किञ्च, बालकेनेति बालानामपि क सुखं यस्माद्बाले बाले कोवा न हि ब्रह्माण्डकोटिविग्रहेणा कार्यपञ्चेपि योद्धुं शक्यते । किञ्च, चिलज्जमयाभि-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

धाष्टर्येन यद्यपि युद्धं कर्त्तुं शक्यते मरणेन मोक्षो भविष्यतीति तथापि लोकलज्जयापि न युद्धमुचितं लोका हसिष्यन्ति स्वामिना सह युद्धयतीति अतो विशिष्टलज्जयापि न योत्स्ये अन्यत्र स्वशक्तिं स्थापयसि चेत् तथापि युद्धं न करिष्यामीत्याह—गुप्तेन इति । त्वया गुप्तः केन वा हन्तुं शक्यते पराजयपक्षे त्वत्त एव मरणमुचितं न त्वन्यस्मात् अपकीर्त्तिरपि भवेत् इति अतो युक्तमेव त्वद्वचितेन सह युद्धम् । किञ्च, अमन्देति । अमो मोक्षः न विद्यते मा माया यत्रेति अमं ददातीत्यमन्द इति न हि मोक्षदात्रा आराध्येन सह कश्चिद् युद्धमभिकाङ्क्षते अतो याहि मोक्षदात । न चाहं यादव एव न तु मोक्षदातेत्याशङ्क्याह—बन्धुहन्निति यदि यादवः स्यात् तर्हि बन्धून् कंसादीन् किं हन्यात् ? अतो यादवमारकत्वात् अस्मत्स्वाम्येव नतु यादव इत्यर्थः । यदापातत प्रतिभात्यन्यथा तत्प्रकरणविरुद्धत्वात् निन्दापरं वचनमुपेक्षणीयमेव प्रामकाणि परं वचनानि ॥ १८ ॥

एवं भगवन्तमयुद्धार्थं प्रार्थयित्वा तेनैव बलभद्रोपि निवृत्तो भविष्यतीति, तं युद्धायाह्वयति—तवेति । तुशब्दः पूर्वशस्त्रार्थव्यावृत्त्यर्थः अन्यथा वयो बन्धुमारणं च तुल्यमिति कथं रामं गृह्णीयात् तेन यादवा एव तस्य मारणीया इति सत्त्वव्यवहितानां सुतरामावेशिनां देहोस्तीति यादवत्वं सिद्धिमिति वसुदेववैरं तत्पुत्रे पातनीयमिति वसुदेवयुद्धप्रतिप्रसवः तथापि यदि श्रद्धेत्याह—अयं हि वसुदेवानुकल्पत्वेन क्लिष्टो भवति तथा सति यदि पितरि श्रद्धा क्षत्रियत्वेन युद्धे वा तदा युद्धस्व आवयोर्यद्यपि समानं बलं तथापि सेना महतीति तत् दृष्ट्वा कदाचिद्भीतो भवेत् अत आह—धैर्यमुद्वहेति । भगवद्व्यतिरिक्तानां अन्यधर्मः प्रवर्त्तते इति अन्तर्बलमस्तीति धैर्यमस्त्येव बाह्यमपि धैर्यं सम्पादयेत्याह—उद्वहेति । ततो यद्भविष्यति तदनिश्चयेनाह—हित्वेति । एकतरनिश्चये युद्धार्थं प्रवृत्तिरेव न स्यात् अतो मच्छरैः छिन्नदेहं हित्वा धैर्यमुत धैर्येण जातां मुदं स्वर्गलक्षणां वह अथवा मच्छरैः छिन्नदेहं हित्वेति "सविशेषणे विधिनिषेधौ विशेष्ये बाधके सति विशेषणमुपसंक्रामतः" इति न्यायेन शरच्छेदनं दूरीकृत्य मां जहि अनेन प्रथममेव प्रहारं करिष्यामीति सूचितम् ॥ १९ ॥

एवं बलभद्रं प्रति यत्स्वपौरुषं ख्यापितं तदयुक्तं मत्वा भगवान् निषेधति—न वै शूरा इति । ये हि शूरास्ते स्वख्यातिं न वदन्ति किन्तु पौरुषमेव दर्शयन्ति यदप्युक्तं न त्वया योद्धुमिच्छामीति ते तव वाक्यं न गृह्णीमः अनेन तद्वाक्यमप्रमाणमित्युक्तं न हीश्वरेण मतं प्रमाणं भवति तेन हि शङ्काद्वयेन युद्धं त्यक्तं मरणं भविष्यति मोक्षे प्रतिबन्धो वा भविष्यतीति तदुभयं न कर्त्तव्यमिदानीं न मारणीयः मोक्षश्च देय इति अत एव भगवान् सर्वस्वदानं कारयित्वा मोक्षं दत्तवान् अतो युक्तमुक्तं "न गृह्णीमो वचः" इति किञ्च हे राजन् ! शूरक्षत्रियाणां युद्ध एव मुक्तिः

"द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः" इति ॥

ब्राह्मणक्षत्रिययोः मोक्षप्रकारस्य प्रतिपादितत्वात् तयोरेव च मोक्षोपदेशः "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः" इत्यत्र निरूपितः अतो मद्रक्षितेनापि तया युद्धं कर्त्तव्यम् अहं तु त्वया सह युद्धं न करिष्यामी बलभद्र एव करिष्याति बलं परं पालनीयमिति भावः । अयमुपदेशो ऽग्रे कार्यार्थः अन्यथा भीमेनापि न युध्येत् । किंच, आतुरस्य वचनं न ग्राह्यं स हि स्वापथ्यमेव याचते अनेन याचितं देयमिति पक्षो निवारितः । किञ्च, मुमूर्षतः मुमूर्षो प्राप्नुवतः कृदन्तात् षष्ठी स हि मोक्षं दूरीकृत्य वृथा मरणं वाञ्छन्ति तादृशं नाङ्गीकर्त्तव्यम् ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पुरुषा अधमा यस्मात् हे पुरुषोत्तमेति भवत्यभिमतोऽर्थः ॥१७॥

बाले बाल एव को ब्रह्मा यस्य तेन महामहेश्वरेण लज्जयेति मम दुर्जीवत्वेनायोग्यत्वादिति भावः । गुप्तेनेति कंसस्य भयाद्गोकुलं प्रति गतस्य एव वैश्यपालितत्वेन वैश्यसाधर्म्यप्राप्तेः पक्षे सर्वान्तरत्वाद्दुर्ज्ञेयत्वेन हे अमन्द बन्धुहन् हे मातुलहन्तः पक्षे बध्नातीति बन्धुरविद्या तां हन्तीति तथा ॥ १८ ॥

श्रद्धेयदेहोऽसाविति । स्वयमेव मत्वा परितोषात् । पक्षान्तरमाह—यद्वा मां जहीति । श्रीस्वामिचरणाः । यद्वा, मत्मत्तः पापात्मनः सकाशात् स्ववैकुण्ठं याहि किं कृत्वा शरैश्छिन्नम् अर्थात् मम देहं हित्वा त्यक्त्वा अत्रैव प्रक्षिप्येत्यर्थः ॥ १९-२० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

॥ १६ ॥

रामकृष्णौ नरकौ इति श्रीश्येति भावः मागध आह ॥१७—१८—१९॥

भगवानपि तदनुरूपमुत्तरं दत्तवान्—न वै इति । विकत्थन्ते श्लाघन्ते ॥ २० ॥

---

भाषा टीका ।

तिस शंख के शब्द से शत्रुसेना वाले योधाओं के हृदय त्रास के मोर कांपने लगे मगधराज जरासंध राम और कृष्ण इन दोनो भ्राता ओं को देख कर वोला, कि — हे कृष्ण तूँ पुरुषो में अधम हैं वास्त वमें तौ पुरुष हैं अधम जिन से अर्थात् हे पुरुषोत्तम ? यह वाणी का अर्थ हुआ ) ॥ १७ ॥

एक तेरे बालक के साथ मैं लज्जा करके युद्ध करने की इच्छा नहीं करता हूं हे मन्द ! हे बन्धुओं के मारनेवाले ! तूं गुप्त ( वैश्य वा रक्षित ) है इस से हम तेरे साथ युद्ध नही करेंगे तूं चला जा ॥ १८ ॥

हे राम ! यदि तेरी श्रद्धा होय तो धैर्य धारणकर युद्ध कर मेरे बाणो से छिन्न देहको छोड़कर स्वर्ग जाना अथवा मेरे को मारना ॥ १९ ॥

